प्रमाणस्य प्रमेयत्वं प्रमेयस्य प्रमाणता ।
यथा लक्षणभेदेन न तथैतेषु दृश्यते ॥

भेदेनोक्ताः किमर्थं तदिति निगदिता पूर्वमेवात्र युक्ति-
र्वादे ह्येते प्रयोज्याः प्रगुणनयविदा तत्त्वशुद्धिं विधातुम् ।
एतेषां धर्मकीर्तेरपि च न विमतिर्निग्रहस्थानताया-
मित्थं द्वाविंशतिर्नो गुरुभिरभिहिता निग्रहस्थानभेदाः ॥

## निग्रहस्थानपदार्थः ।

इत्येवं सूत्रकारागममनुसरता ऽनुज्झता भाष्यभूमिं
स्थाने स्थाने परेषां मतमतुलगति क्षिपता तार्किकाणाम् ।
कां चिद्व्याख्यार्थचर्चामपि विरचयता ऽनुक्रमेणावतीर्णा
निर्णीताः स्वे निबन्धे निपुणमिह मया षोडशैते पदार्थाः ॥

न्यायोद्गारगभीरनिर्मलगिरा गौरीपतिस्तोषितो
वादे येन किरीटिनेव समरे देवः किराताकृतिः ।
प्राप्तोदारवरस्ततः स जयति ज्ञानामृतप्रार्थना-
नाम्ना ऽनेकमहर्षिमस्तकवलत्पादो ऽक्षपादो मुनिः ॥

वादेष्वाप्तजयो जयन्त इति यः ख्यातः सतामग्रणी-
रन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः ।
सूनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषा
चक्रे चन्द्रकलावचूलचरणध्यायी स धन्यां कृतिम् ॥

नमः शशिकलाकोटिकल्प्यमानाङ्कुरश्रिये ।
प्रपन्नजनसंकल्पकल्पवृक्षाय शंभवे ॥

इति श्रीजयन्तभट्टकृतायां न्यायमञ्जर्यां द्वादशमाह्निकम् ॥१२॥
समाप्ता चेयं न्यायमञ्जरी ॥
शुभमस्तु ॥

